# श्रीशिवाष्टोत्तरशतनामस्तोत्रम्

नारायण उवाच ।
अस्ति गुह्यतमं गौरि नाम्नामष्टोत्तरं शतम् ।
शम्भोरहं प्रवक्ष्यामि पठतां शीघ्रकामदम् ॥

ॐ अस्य श्रीशिवाष्टोत्तरशतनामस्तोत्रमन्त्रस्य नारायणऋषिः ।
अनुष्टुप्छन्दः । श्रीसदाशिवो देवता । गौरी उमा शक्तिः ।
श्रीसाम्बसदाशिवप्रीत्यर्थे जपे विनियोगः ॥

अथ ध्यानम् -
शान्ताकारं शिखरिशयनं नीलकण्ठं सुरेशं
विश्वधारं स्फटिकसदृशं शुभ्रवर्णं शुभाङ्गम् ।
गौरीकान्तं त्रितयनयनं योगिभिर्ध्यानगम्यं
वन्दे शम्भुं भवभयहरं सर्वलोकैकनाथम् ॥

शिवो महेश्वरश्शम्भुः पिनाकी शशिशेखरः ।
वामदेवो विरूपाक्षः कपर्दी नीललोहितः ॥ १॥

शङ्करश्शूलपाणिश्च खट्वाङ्गी विष्णुवल्लभः ।
शिपिविष्टोऽम्बिकानाथः श्रीकण्ठो भक्तवत्सलः ॥ २॥

भवश्शर्वस्त्रिलोकेशश्शितिकण्ठश्शिवाप्रियः ।
उग्रः कपाली कामारिः अन्धकासुरसूदनः ॥ ३॥

गङ्गाधरो ललाटाक्षः कालकालः कृपानिधिः ।
भीमः परशुहस्तश्च मृगपाणिर्जटाधरः ॥ ४॥

कैलासवासी कवची कठोरस्त्रिपुरान्तकः ।
वृषाङ्को वृषभारूढो भस्मोद्धूलितविग्रहः ॥ ५॥

सामप्रियस्स्वरमयस्त्रयीमूर्तिरनीश्वरः ।
सर्वज्ञः परमात्मा च सोमसूर्याग्निलोचनः ॥ ६॥

हविर्यज्ञमयस्सोमः पञ्चवक्त्रस्सदाशिवः ।
विश्वेश्वरो वीरभद्रो गणनाथः प्रजापतिः ॥ ७॥

हिरण्यरेता दुर्धर्षः गिरीशो गिरिशोऽनघः ।
भुजङ्गभूषणो भर्गो गिरिधन्वा गिरिप्रियः ॥ ८॥

कृत्तिवासा पुरारातिर्भगवान् प्रमथाधिपः ।
मृत्युञ्जयस्सूक्ष्मतनुर्जगद्व्यापी जगद्गुरुः ॥ ९॥

व्योमकेशो महासेनजनकश्चारुविक्रमः ।
रुद्रो भूतपतिः स्थाणुरहिर्बुध्न्यो दिगम्बरः ॥ १०॥

अष्टमूर्तिरनेकात्मा सात्त्विकश्शुद्धविग्रहः ।
शाश्वतः खण्डपरशुरजः पाशविमोचकः ॥ ११॥

मृडः पशुपतिर्देवो महादेवोऽव्ययो हरिः ।
भगनेत्रभिदव्यक्तो दक्षाध्वरहरो हरः ॥ १२॥

पूषादन्तभिदव्यग्रो सहस्राक्षस्सहस्रपात् ।
अपवर्गप्रदोऽनन्तस्तारकः परमेश्वरः ॥ १३॥

फलश्रुतिः ।
एतदष्टोत्तरं नाम्नां शतमाम्नायसंमितं ।
शङ्करस्य प्रिया गौरी जप्त्वा शम्भुप्रसाददम् ॥ १॥

त्रैकाल्यमन्वहं देवी वर्षमेकं प्रयत्नतः ।
अवाप सा शरीरार्धं प्रसादाच्छूलपाणिनः ॥ २॥

यस्त्रिसन्ध्यं पठेन्नित्यं नाम्नामष्टोत्तरं शतम् ।
शतरुद्रत्रिरावृत्या यत्फलं लभते नरः ॥ ३॥

तत्फलं प्राप्नुयान्नित्यमेकावृत्त्या नसंशयः ।
सकृद्वा नामभिः पूज्य कुलकोटिं समुद्धरेत् ॥ ४॥

बिल्वपत्रैः प्रशस्तैश्च पुष्पैश्च तुलसीदलैः ।
तिलाक्षतैर्यजेद्यस्तु जीवन्मुक्तो न संशयः ॥ ५॥

इति श्रीशिवाष्टोत्तरशतनामस्त्रोत्रं समाप्तम् ॥